ॐ

विराट् विश्वकर्म परब्रह्मणे नमः

# ऋग्वेद विश्वकर्म पारायणं

## ருக்வேத விஸ்வகர்ம பாராயணம்
## RigVeda Visvakarma Parayanam



தமிழ்நாடு விஸ்வபிராமண புரோஹிதர்களின்
சங்க கூட்டத்தில் 3.1.2016 அன்று வெளியிடப்பட்டது

*By T.M.S.Suresh Sarma*

## முகவுரை:

ஸமஸ்த மஹா குலத்தினர்களுக்கும் மற்ற அனைத்து பெரியோர்களுக்கும் என்னுடைய அன்பான நமஸ்காரம். வேதத்தில் ஸ்ரீ விஶ்வகர்மாவை குறித்த ஸூக்தங்களும் மந்திரங்களும் அனேகமுள்ளது. ஆனால் தமிழகத்தில் 2010 முன்வரை புஸ்தக வடிவில் இரண்டு ஸூக்தங்கள் மட்டுமே விஶ்வகர்ம பிராமண ஸமூக பெரியோர்களால் யஜுர்வேதத்திலிருந்து வெளியிடப்பட்டுள்ளது. இவைகள் இன்றி ருக் வேதத்தில் ஸ்ரீ விஸ்வகர்ம ஸூக்தங்கள் இடம்பெற்றுள்ளது.

தக்ஷிண பாரதீயத்தில் மிகபிரசித்தி பெற்ற சாகள மற்றும் சாங்காயன ரிக்வேதச் சாகையில் ஸூக்கதங்கள் உள்ளது. இவைகளையும் வேதங்களில் மற்றுள்ள உள்ள ஸூக்தங்களையும் 10 ஆண்டுகளாக தொகுத்து என்னுடைய விவாஹத்தின் (15.9.2013) போது **“விஶ்வகர்ம ஸம்ஹிதா”**வாக வெளியிட்டேன். அப்புத்தகத்தில் தேவநாகரி லிபியிலும் வடமொழி தெரியாதவர்களுக்காக ஸாதாரணமான நடையில் தமிழிலிலும் போடப்பட்டது. இருந்த போதிலும் வேதங்களை தத்தம் ஸ்வரங்களுடன் றுஷி, சந்தஸ் மற்றும் தேவதா ஆதாரத்துடன் நன்கு ஆர்வமுடையவர்களுக்கு தரவேண்டும் என்று விஶ்வகர்ம வைதீகர்கள் சிலர் வேண்டுகோளுக்கு இணங்க இப்புஸ்தகம் தொகுக்கப்பட்டுள்ளது. இந்த புஸ்தகம் சரியான முறையில் ரிக்வேதமோத அனைவருக்கும் பயன்படும் என்று எண்ணி இதை நமது வைதீக புரோஹிதர்கள் மற்றுள்ள விஶ்வகர்ம பக்தர்களுக்காவும் என்னுடைய தாய்தந்தையர், குரு மற்றும் ஸ்ரீ விஸ்வகர்மாவின் அருளோடு இதை வெளியிடுகின்றேன்.

இப்புத்தகத்திலுள்ள றுஷி, சந்தஸ், தேவதா நிரூபணங்களுக்காக ஶௌநக ரிஷி, காத்யாயன ரிஷி, கௌதூம ரிஷி, ப்ருஹத் ரிஷி மற்றும் ஆஸ்வலாயந ரிஷி முதலியவர்கள் வேதத்திற்கு எழுதிய ஸர்வானுக்கிரஹ மணிகையிலுள்ள ஆதாரத்திலிருந்து கொடுத்துள்ளேன். **“ருக்வேத விஶ்வகர்ம பாராயணம்**” என்ற இந்நூலில் ஸ்ரீ விஸ்வகர்ம பிரஜாபதிக்கு மட்டுமே வேதத்தில் பஞ்ச முகங்கள் உண்டு என்ற வேத நிரூபணத்தினை கொடுத்துள்ளேன். நமஸ்கார ஸூக்தம், விஸ்வகர்ம பஞ்சமுக நிரூபண மந்திரம், விஸ்வகர்ம ஸூக்தங்கள் மூன்று, விராட்புருஷ ஸூக்தம், ஹிரண்யகர்ப ஸூக்தம், பரமாத்ம ஸூக்தம் மற்றும் பரமேஷ்டீ ஸூக்தம் முதலியவைகள் தேவநாகரியில் மட்டுமே இங்கு கொடுத்துள்ளேன். இதை அனைவரும் சரியான முறையில் பயன்படுத்தி ஓம் ஸ்ரீ மத் விராட் விஶ்வகர்ம பரப்ரஹ்மத்தின் அனுகிரஹத்தினை பெற வேண்டுகின்றேன். நன்றி.

இங்ஙனம் பிரம்ம வம்ச பிராமணீயத்திற்காக,

**பே. ஸுரேஷ் ஶர்மா MBA**,
12- குப்புதாசன் தெரு,
இராசிபுரம் - 637408,
நாமக்கல் மாவட்டம்.

## ॥ अथ नमस्कार सूक्तं ॥

**॥ ऋषिः देवरातः विश्वामित्रः १-२ भृग्वाङ्गिरसः ३-६**

**छन्दः अनुष्टुप् ३-४ः जगतीः ५ त्रिष्टुप् २ः ६ बृहतीः देवता विद्युः ॥**

ॐ नमो देवेभ्यो नमो देवताभ्यो नमो महते देवाय नमो गन्धर्वाप्सरोभ्यो नमः
सर्पदेवजनेभ्यो नमो भूताय नमो भविष्यते नमः पितृभ्यः नमस्कारेभ्यो नमः॥
१॥ नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः। यजाम
देवान्यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः॥ २॥ नमस्ते अस्तु विद्युते
नमस्ते स्तनयित्वने-। नमस्ते अस्तु अश्मने यो मा दूणाशो अस्यसि॥ ३॥
नमस्ते प्रवतो नपाद्यत्तस्तपः समूहसि। मृळया नस्तनुभ्यो अभयं- नः पशुभ्यः॥
४॥ प्रवतो नपान् नम एवास्तु तुभ्यं नमस्ते हेतये तपुषे च कृण्मः। विद्मा ते
नाम परमं गुहा यत् समुद्रे अन्तर्निहितापि नासि॥ ५॥ यां त्वा देवा अजनिष्टा
धिष्व धियं- कृण्वाना असनाय वायं। सा नो मृळ विदथे- गृणाना तस्यै- ते नमो
अस्तु देवि॥ ६॥

## ॥ अथ विश्वकर्म पञ्चमुख निरूपणं ॥

**॥ ऋषिः सुयज्ञः शाङ्खायनः छन्दः सर्वछन्दाꣳसिः देवता प्रजापतिर्विश्वकर्मा ॥**

प्रजापतिर्विश्वकर्मा तदे-नं स्वेन रूपे-ण समर्धयति। पञ्चमुखोऽसि प्रजापतिः॥
ब्राह्मणं त एकं मुखं तेन मुखे-न राज्ञोऽत्सि। तेन मुखे-न मां अन्नादं कुरु॥
राजा त एकं मुखं तेन मुखे-न विशोऽत्सि। तेन मुखे-न मां अन्नादं कुरु॥
श्येनं- त एकं मुखं तेन मुखे-न पक्षिणोऽत्सि। तेन मुखे-न मां अन्नादं कुरु॥
अग्निष्ट त एकं मुखं तेन मुखे-न लोकं अत्सि। तेन मुखे-न मां अन्नादं कुरु॥
त्वयि पञ्चमं मुखं तेन मुखे-न सर्वाणि भूतान्यत्सि। तेन मुखे-न मां अन्नादं
कुरु॥



## अथ विश्वकर्म सूक्तं ॥ १ ॥

**॥ ऋषिः विश्वकर्मा भौवनः छन्दः त्रिष्टुप् स्वरः धैवतः देवता विश्वकर्मा ॥**

य इमा विश्वा भुवनानि जुह् वदृषिहोता निषासादा पिता नः।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराꣳ आ विवेशा ॥ १ ॥
किꣳ स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीत् ।
यतो भूमिं- जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ २ ॥
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत उत विश्वतस्पात्।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥ ३ ॥
किꣳ स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद् भुवनानि धारयन् ॥ ४ ॥
या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तनुवं वृधानः ॥ ५ ॥
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघावा सूरिरस्तु ॥ ६ ॥
वाचस्पतिं- विश्वकर्माणमूतये- मनोजुवं वाजे- अद्या हुवेम।
स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा ॥ ७ ॥

## अथ विश्वकर्म सूक्तं ॥ २ ॥

**॥ ऋषिः विश्वकर्मा भौवनः छन्दः त्रिष्टुप् स्वरः धैवतः देवता विश्वकर्मा ॥**

चक्षुषः पिता मनसा हि धीरो घृतमे-ने अजनन्नन्नमाने।
यदेदन्ता अददꣳ हन्त पूर्व आदिद् द्यावापृथिवी अप्रथेतां ॥ ८ ॥
विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत सन्दृक्।

तेषामिष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन्पर एकमाहुः ॥ ९ ॥
यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
यो देवानां- नामधा एक एव तꣳ सं प्रश्नं भुवना यन्त्यन्या ॥ १० ॥
त आयजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे- जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ ११ ॥
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
कꣳ स्विद् गर्भं- प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे- ॥ १२ ॥
तमिद् गर्भं- प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे- ।
अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ॥ १३ ॥
न तं विदाथ य इमा जजाना ऽन्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चा ऽसुतृप उक्थशासश्चरन्ति ॥ १४ ॥

## अथ विश्वकर्म सूक्तं ॥ ३ ॥

**॥ ऋषिः विश्वकर्मा वसिष्ठर्वा छन्दः गायत्रीः जगतीर्वा देवता विश्वकर्मा ॥**

समुद्राय वैणवे नमो । वरुणाय धर्मपतये नमो । नमः सर्वाभ्यो नदीभ्यः ॥ १ ॥
सर्वासां पित्रे विश्वकर्मणे- । दत्तꣳ हविर्जुषतां ॥ २ ॥ विराट्पुरुषाय विद्महे- ।
विश्वकर्मणय धीमहि । तन्नो परब्रह्मः प्रचोदयात् ॥ ३ ॥

## अथ विराट्पुरुष सूक्तम् ॥

**॥ ऋषिः नारायणः छन्दः अनुष्टुप् जगतीः १६ देवता पुरुषः ॥**

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं- विश्वतो वृत्वात्य तिष्ठद्दशाङ्गुलम् ॥ १ ॥
पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भव्यम्- ।



उतामृतत्वस्येशानो यदन्ने- नातिरोहति ॥ २ ॥
एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं- दिवि ॥ ३ ॥
त्रिपादूर्ध्व उदैत्पुरुषः पादो-ऽस्येहाभवात्पुनः ।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥४ ॥
तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यम्- ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥
तं यज्ञं बर्हिषि प्रौक्षन्न् पुरुषं जातामग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ७ ॥
तस्माद्ययज्ञात् सर्वहुतः संभृतं पृषदाज्यम् ।
पशून् ताँश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ॥ ८ ॥
तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दाँसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥
तस्मादश्वा अजातन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥ १० ॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्न् ।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥ ११ ॥
ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याँ शूद्रो अजायत ॥ १२ ॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।

मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥
नाभ्या आसीदन्तरिक्षम् शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन्न् ॥ १४ ॥
सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्मामि प्रथमानयासन् ।
ते ह नाकं- महिमानः सचन्त यत्र पूर्वे- साध्याः सन्ति देवाः ॥ १६ ॥

## अथ हिरण्यगर्भ सूक्तम् ॥

**॥ ऋषिः हिरण्यगर्भः प्रजापतिः छन्दः त्रिष्टुप् देवता (कः) प्रजापतिः ॥**

हिरण्यगर्भः समवर्तताऽग्रे- भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै- देवाय हविषा विधेम ॥ १ ॥
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै- देवाय हविषा विधेम ॥ २ ॥
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
**य ईशे- अस्य द्विपद श्चतुष्पदः** कस्मै- देवाय हविषा विधेम ॥ ३ ॥
यस्येमे हिमवन्तो महित्वा यस्य समुद्रँ रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै- देवाय हविषा विधेम ॥ ४ ॥
येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै- देवाय हविषा विधेम ॥ ५ ॥
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षे-तां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै- देवाय हविषा विधेम ॥ ६ ॥



आपो ह यद् बृहती र्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः कस्मै- देवाय हविषा विधेम ॥ ७ ॥
यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञं ।
यो देवेष्वधि देव एक आसीत् कस्मै- देवाय हविषा विधेम ॥ ८ ॥
मा नो हिँसीज्जनिता यः पृथिव्या यो वा दिवँ सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै- देवाय हविषा विधेम ॥ ९ ॥
**प्रजापते** न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो असत वयँ स्याम पतयो रयीणाम् ॥ १० ॥

## अथ परमात्म सूक्तम् ॥

**॥ ऋषिः वेनः भार्गवः छन्दः त्रिष्टुप् देवता परमात्मा ॥**

वेनस्तत्पश्यन्त परमं पदं- यत्र विश्वं भवत्येकनीळं- ।
इदं धेनुरदुहं- जायमानाः स्वर्विदोभ्यनुक्ति विराट् ॥ १ ॥
पृथग्वोचेदमृतं न विद्वान् गन्धर्वो धाम परमं-गुहा यत् ।
त्रीणि पदानि हता गुहासु वस्तानि वेद स पितुष्पिता सत् ॥ २ ॥
**स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।**
**यत्र देवा अमृतामानशाना समाने धामन्नद् धीरयन्त** ॥ ३ ॥
परि विश्वा भुवनान्यायमुपाचष्टे प्रथमजा ऋतस्य ।
वाचसि वाक् त्रिभुवनेष्ठा धास्त्रं नेषणत्वेषो अग्निः ॥ ४ ॥
परि द्यावापृथिवी यन्ति सद्यायमृतस्य तन्तुं- विततं- दृकेशं ।
देवो देवत्वमभिरक्षमाणः समानं- बन्धुं- विपरिच्छन्देकः ॥ ५ ॥

## अथ परमेष्ठी सूक्तम् ॥

**ऋषिः परमेष्ठीः प्रजापतिः छन्दः त्रिष्टुप् देवता परमेष्ठीः ॥**

अग्ने-यशस्विन् यशसे समर्पयेन्द्रावतीं अपचितीं इहाऽऽवह ।
अयं मूर्धा परमेष्ठी सुवर्चाः सजातानां उत्तश्लोको अस्तु ॥ १ ॥
भद्रं पश्यन्त उप सेदुरागन् ततो दीक्षां ऋषयः स्वर्विदः ।
ततः क्षत्रं बलं ओजश्च जातं तदस्मै देवा अभि सं नमन्तां ॥ २ ॥
**धाता विधाता परमोत सन्दृक् प्रजापतिः परमेष्ठी** सुवर्च्चा ।
स्तोमाꣳश्छन्दाꣳसि निविदो म आहुरेतस्मै- राष्ट्रमभि सं नमन्तां ॥ ३ ॥
अभ्यावर्तध्वं उपसेवताऽग्निं- अयꣳ शास्ताधिपतिर्वो अस्तु ।
अस्य विज्ञानं- अनु सꣳरभध्वं इमं पश्चादनु जीवाथ सर्वे- ॥ ४ ॥

**॥ ऋषिः सुयज्ञः शांखायनः छन्दः शक्वरीः गायत्रीः देवता शान्तिः ॥**

ॐ ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु ।
तद्वक्तारमवतुमां । अवतु वक्तारं ॥
मयि भर्गो मयि महः । वाङ् मे मनसि प्रतिष्ठता । मनो मे वाचि प्रतिष्ठां ।
आविराविर्मर्य्याभूः । वेदस्य म आणीः । ऋत मा मा हिँसी ॥
अनेनाधीते नाहोरात्रान् त्संवसामि । अग्ने इळ नम इळ नमः ।
ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमोऽस्तु देवेभ्यः ॥
शिवा नः शन्तमा भव समृडीका सरस्वति । मा ते व्योम संदृशि ॥
अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठः ।
दीक्षे मा मा हिँसीः ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

**सर्वं विश्वकर्माऽर्पणमस्तु ॥**



## अथ वाग्देवी सूक्तं ॥

**॥ ऋषिः नेमः १ः२ पतङ्गः ३ दीर्घथमः४ बृहस्पतिः ५ः६ आश्वलायनर्वा**
**छन्दः त्रिष्टुप् देवता वाग्देवीः ॥**

देवीं वाचमजनयन्त देवास्तां विश्वरू-पाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥ १ ॥

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।
चतस्र ऊर्जं- दुदुहे पयाꣳसि क्व स्विदस्याः परमं जगाम ॥ २ ॥

पतंगो वाचं मनसा बिभर्ति तां गन्धर्वो ऽवदद्गर्भे- अन्तः ।
तां द्योतमानां स्वर्यं- मनीषामृतस्य पदे कवयो नि पान्ति ॥ ३ ॥

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं- वाचो मनुष्या वदन्ति ॥ ४ ॥

यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम् ।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते ॥ ५ ॥

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं १ वि सस्रे जायेव पत्य उशती सुवासाः ॥ ६ ॥

वाग्देव्यैच विद्महे वाचस्पतिपत्न्यैच धीमहि ।
तन्नो वेदमाता प्रचोदयात् ॥ ७ ॥

**ॐ सर्वं विश्वकर्मार्पणमस्तु ॥**